# संस्कृत-वार्ताः

**दिनाङ्कः - 25-12-2020**

**प्रातः - 06 : 55**

**मुख्यवार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी अद्य दृश्यश्रव्यपरान्तर्जालीय-माध्यमेन प्रधानमन्त्री किसान समान-निधि इति योजनान्तर्गतं वित्तीय-लाभप्रदं मासदेयं प्रवर्तयिष्यते। अवधेयं अस्ति यत् एतद् योजनान्तर्गतं षड् सहस्ररुप्यकाणां वित्तीयलाभः प्रदीयते।
- कोविड-19 इति वैश्विकसंक्रमणं धूलीसात्-कर्तुं कोरोना-प्रतिरोधी-वीराणां प्रयासाः साफल्यं यान्ति। साम्प्रतं कोरोना प्रत्यवाप्तिमितौ परिष्कारः विवर्ध्य प्रतिशतं पञ्च-सप्त दशमलवोत्तर पञ्चनवति मितः समजायत।
- केन्द्रप्रशासनं पत्रं विलिख्य कृषकप्रतिनिधिमण्डलं पुनरेकवारं संवादाय समाह्वयत्। कृषकद्वारा समुत्थापित-विषयेषु चर्चाः विधास्यते अपि तत्समाधानाय च संकल्पः स्मारितः।
- प्रधानमन्त्री नरेन्द्रमोदी आगामि रविवासरे पूर्वाह्णे एकादश वादने स्वीये मन की बात इति मासिक कार्यक्रमे राष्ट्रवासिभिः साकं विचार-विनिमयं करिष्यति।

--------

**कोविड-ओपनिंग**

प्रियाः श्रोतारः कोविड नाइन्टीन इति वैश्विक संक्रमणं विरुध्य राष्ट्रं ऐक्यभावनया युध्यते। भवन्तोऽपि संक्रमणं इदं परास्तुं सन्नद्धाः भवन्तु। मुखनासिकाच्छादकं, सामाजिकदौर्यानुपालनं, पाणिपाद-प्रक्षालनञ्च इति उपायत्रयं सर्वदैव अवधारयन्तु।

--------

**प्रधानमंत्री-किसान**

प्रधानमन्त्री नरेन्द्रमोदी अद्य दृश्यश्रव्यपरान्तर्जालीय-माध्यमेन प्रधानमन्त्री किसान समान-निधि इति योजनान्तर्गतं वित्तीय-लाभप्रदं मासदेयं प्रवर्तयिष्यते। प्रधानमन्त्रिणः मोदिनो अनेन पदक्षेपेण एकस्मिन् एव क्षणे नव कोट्यधिक लाभार्थि-कृषकेभ्यः अष्टादश-सहस्र कोटि रुप्यकाणां हस्तानन्तरणं भविता। आयोजनावधौ कृषकैः साकं प्रधानमन्त्रिणः संवादोऽपि अनुष्ठीयते। कृषकाः योजनायै अस्मै स्वीयविचारान् प्रकटयिष्यन्ति अपि च कृषकेभ्यः प्रारब्धयोजनानां विषये स्वीयमतं उपस्थास्यन्ते। अवसरेऽस्मिन् केन्द्रीय-कृषि-कृषक-कल्याण मन्त्री नरेन्द्रसिंह तोमरोऽपि उपस्थितो भविता। अवधेयं अस्ति यत् एतद् योजनान्तर्गतं षड् सहस्ररुप्यकाणां वित्तीयलाभः प्रदीयते।

--------

**केन्द्र-किसान**

केन्द्रप्रशासनं पत्रं विलिख्य कृषकप्रतिनिधिमण्डलं पुनरेकवारं संवादाय समाह्वयत्। कृषकद्वारा समुत्थापित-विषयेषु चर्चाः विधास्यते अपि तत्समाधानाय च संकल्पः स्मारितः। प्रशासनेन कृषक-प्रतिनिधिमण्डलं संवादाय दिनांकं कालं च निर्धारणाय अभ्यर्पितम्। कृषकप्रतिनिधि-मण्डलं प्रति विलिखितं पत्रं आलक्ष्य कृषिमन्त्रालयस्य संयुक्तसचिवेन विवेक-अग्रवालेन सबलं प्रत्यपादि यत् केन्द्रप्रशासनं कृषकैः साकं उन्मुक्तमनसा चर्चयितुं, आन्दोलनकारी-कृषकाणां समस्या-समाधानं च सततं प्रयासं करोति।

--------

इदं संस्कृतवार्ता-प्रसारणम् आकाशवाणीतः प्रसार्यते। दैशिकीः वैदेशिकीश्च प्रत्यग्रवार्ताः ज्ञातुं नुदन्तु news on air इति अस्माकम् अन्तर्जालीय वेबफलकम्।

--------

**प्रधानमन्त्री – टैगोर**

प्रधानमन्त्रिणा नरेन्द्रमोदिना प्रत्यपादि यत् गुरोः रवीन्द्रनाथटैगोरस्य दृष्टिः आत्मनिर्भर-भारतस्य साररूपा वर्तते। तेन स्पष्टीकृतं यत् विश्वकल्याणाय पन्था आत्मनिर्भरभारतात् एव प्रादुर्भवति। अवधेयम् अस्ति यत् शान्तिनिकेतनस्थ विश्वभारती विश्वविद्यालयस्य शताब्दी-समारोहं सम्बोधयता तत्रत्य कुलाधिपतिः प्रधानमन्त्री नरेन्द्रमोदी अवोचत् यत् गुरुः वाञ्छति स्म यत् भारते यत्किमपि श्रेष्ठत्वं भजते तल्लाभं अखिलमपि राष्ट्रं प्रापयेत् तथैव अधिविश्वं यत् किमपि श्रेष्ठत्वं भजते तल्लाभं भारतं प्राप्नुयादिति। तेन स्पष्टीकृतं यत् राष्ट्रं विश्वभारत्याः सन्देशं सम्पूर्णेऽपि विश्वे प्रसारयति। प्रधानमन्त्रिणा प्रोक्तं यत् विश्वभारती प्रकृत्या साकं जीवनयापनं शिक्षितम्। तेन प्रोक्तं यत् भारतं एकमात्रराष्ट्रं वर्तते यद्धि पेरिस सहमत्यनुगुणं पर्यावरणलक्ष्यानि प्राप्तुं सम्यक् दिशि अग्रेसरति। प्रधानमन्त्रिणा प्रोक्तं यत् भारतं अन्ताराष्ट्रिय-सौर-संयुत्या पर्यावरण संरक्षणाय अधिविश्वं अग्रगामित्वं भजते। प्रधानमन्त्री मोदी बंगाल प्रान्तीय भक्तिपरम्परां सम्मुलेखयन् तत्रत्य स्वातन्त्र्यवीरान् संस्मारयत् अपि च स्थानीय छात्राः तेन स्थानीय हस्तशिल्पवस्तूनि सामाजिकसञ्चारमाध्यमैः साकं योजयितुं समभ्यर्थिताः।

--------

**कोविड-अपडट**

कोविड-19 इति वैश्विकसंक्रमणं धूलीसात्-कर्तुं कोरोना-प्रतिरोधी-वीराणां प्रयासाः साफल्यं यान्ति। साम्प्रतं कोरोना प्रत्यवाप्तिमितौ परिष्कारः विवर्ध्य प्रतिशतं पञ्च-सप्त दशमलवोत्तर पञ्चनवति मितः समजायत। विगते अहोरात्रे प्रायः त्रिंशत् सहस्रजनाः स्वस्थीभूताः। अनेन सहैव कोविड नाइन्टीन् इति वैश्विक संक्रमणात् स्वस्थीभूय-मानानां संख्या त्रिनवति सहस्राधिक षण्णवति लक्षाधिका संवृत्ता। अधुना देशे सक्रिय-प्रकरणानि त्र्याशीति सहस्राधिक द्विलक्षं वर्तते। गत चतुर्विंशतिहोरासु द्वादशाधिक त्रिशतं जनाः कालकवलिताः सूच्यन्ते। स्वास्थमन्त्रालयानुसारं देशे मृत्यमितिः अपचीय चत्वारि पञ्च दशमलवोत्तर एकप्रतिशतं यावत् संवृत्ता।

--------

**मन की बात**

प्रधानमन्त्री नरेन्द्रमोदी आगामि रविवासरे पूर्वाह्णे एकादश वादने स्वीये मन की बात इति मासिक कार्यक्रमे राष्ट्रवासिभिः साकं विचार-विनिमयं करिष्यति। इदं हि अस्य वर्षस्य अन्तिमो मन की बात कार्यक्रमो विद्यते। अवधेयं यत् प्रधानमन्त्री प्रत्येकं मासस्य अन्तिमे रविवासरे देशवासिभिः साकं आकाशवाण्या प्रसारिते मन की बात इति कार्यक्रमे विचार-विनिमयं करोति।

--------

**।। इति वार्ताः ।।**